विद्यादितरजातौ॥६२॥ नाडीपूर्वंव्रणंपुंसिभवति अयंनाडीव्रणः॥नाड्युपपदइतिकिं॥दुष्टव्रणं॥वृक्षाद्यः॥पुंसिभवंति॥अयंवृक्षस्तरुः॥जनोलोकः॥पांसुश्चूर्णं॥कंदुःस्वेदनी॥ ॥कलशोघटः॥पंजरादीनितरजातौनपुंसकेजानीयात्॥इदंपंजरंशकुनिबंधनं॥पलितंजरा॥द्वंद्वंवैरं॥अक्षरंवर्णः॥६२॥ मेधारसनानिद्रातंद्रातंत्र्यःस्त्रियांसमंजिष्ठाः॥मदिरामंदुराक्षशारेस्यातांवाद्यदुंदुभिश्च॥॥६३॥ एतेस्त्रियांभवंति॥इयंमेधाधारणाशक्तिः रसनाशक्तिर्मेखलाच॥निद्रासुप्तिः॥तंद्राआलस्यं॥तंत्रीवाद्यविशेषः॥मंजिष्ठारागद्रव्यं॥स्यातांभवेतामित्यर्थः॥इयंमदिरा॥सुरामंदुरावाजिशाला॥क्षशारातिलयवाग्रूः अक्षैर्दीव्यतेअक्षग्रहणंवादित्रसंबंधनिवृत्यर्थं॥वाद्यं दुंदुभिरित्यर्थः॥६३॥ धान्यद्विदलांशुकवितानवलयरत्नमिथुनश्मशानानि॥बिसतिमिराग्रयपिविद्यान्नपुंसकेग्रखेचैव॥६४॥ एतेशब्दानपुंसकेभवंति॥इदंधान्यं सस्यं॥द्विदलंमुद्गादीनां॥अंशुकंवस्त्रं॥वितानंवस्त्रमयमावरणं॥वलयंसुवर्णादीनां॥रत्नंमणिः॥मिथुनंस्त्रीपुंसद्वंद्वं॥श्मशानंमृतस्थानं॥बिसंपद्ममूलं॥तिमिरंतमः॥अग्रंशिखरंश्रेष्ठंवा॥खमाकाशं॥६४॥ पुंजाद्रिकोणकरीषकषायतरत्नपिण्याकगर्भदर्भाश्चपुंसिस्युः॥पत्तनशुल्वताम्रचापनाम्नांनपुंसकता॥६५॥ एतेशब्दाः

पुंसिस्युः॥अयंपुंजः संघातः॥अद्रिः पर्वतः॥ कोणोगृहादीनां॥ करीषोगोमयविकारः॥गर्भऔदर्यः॥दर्भः कुशः॥अर्भोबालः॥पत्तनादीनांयेपर्यायाः शब्दास्तेषां नपुंसकत्वं॥इदंपत्तनंनगरंपुरमित्यादि॥शुल्वंम्लेच्छमुखं॥ताम्रमुदुंबरमित्यादि॥चापंधनुःकार्मुकमित्यादि॥६५॥ विउवर्णास्त्रीज्ञेयासस्नावीथ्योचनीविभेर्योच॥मंजूषागंडूषामूषापरिषद्गुहाचैव॥६६॥ विट्शब्दोयदाअवर्णेस्तदास्त्रियांभवति॥यथाइयंविट्विष्ठा॥अवर्णइतिकिं॥अयंविट्वैश्यस्तृतीयोवर्णः सास्नादयस्त्रियांभवंति॥सास्नागलकंबलः॥वीथीगृहावयवः॥नीवीमूलबंधनं॥भेरीवाद्यविशेषःमंजूषापेटापुस्तकादीनां॥गंडूषाहस्तजलं॥मूषासुवर्णधमनिका॥परिषत्सभा॥गुहापर्वतस्य॥६६॥ तृष्णाकृपापताकारथ्याकृषिश्चकाकिणीचैव॥एतेस्त्रियांभवंतिप्रतिशीराधाराचनेमिश्च॥६७॥ एते तृष्णादयः शब्दाःस्त्रियांभवंति॥इयंतृष्णापिपासा॥कृपादयापताकाचिन्हं॥रथ्यामार्गः॥ कृषिर्वैश्यवृत्तिः॥काकिणीपणचतुर्भागः॥प्रतिशीरातिरस्करिणी॥धाराप्रपतनं॥उर्णामयीपर्वतस्यरेखाचनेमिश्चक्रपिंडिका॥६७॥ चतुःपथयुगलछलचेलखोलधिषायागंलशफानां॥विद्धिनपुंसकभावंपरायस्यचपिछपत्लयोश्च॥६८॥ चतुष्पथादीनांनपुंसत्वंविद्धिजानीहि इदंचतुष्पथं॥युगलंयुग्मं॥छलंव्याजः॥चेलंवस्त्रजा

तिः॥ खोलंभग्नभाडं॥धिश्र्यंगृहं॥अर्गलंद्वारपिधानं शफंखुरः॥पण्यंविक्रेतव्यंपिछंमयूरस्य॥पलंचतुःप लिपरिमाणं ॥६८॥ रथमंडपनरककपालगुडम णिमेढ्रदर्दुरकुसूलाः॥युग्माकाशव्रतशृंगवर्जिताः मंचःसदापुंसि॥६९॥ एतेशब्दाःपुंसिभवंति॥अयं रथोवेगः॥मंडपोजनाश्रयः॥नरकोदुर्गतिः॥अवीचि रित्यादि॥असुरश्च॥कपालःसिरोवयवः॥भिक्षाभा जनंच॥गुडइक्षुविकारःमणिःरत्नं॥मेढ्रःशिश्नं॥दर्दु रोभेकः॥कुसूलोधान्यादिस्थित्याधारः॥युग्माकाशव्र तशृंगवर्जिताइति॥युग्मादयश्चनपुंसकेभवंति॥इदं युग्मंयुगलं॥आकाशंनभः॥व्रतंनियमः॥शृंगंविषाणं पर्वतस्यच॥मंचःकाष्ठकृतः॥६९॥ स्थूलालक्तक कर्पासस्सूर्यकूर्पाससारथितरंगाः॥अलकसमुद्गा वराटकनूपुरकंकणाःपुंसि॥७०॥ एतेशब्दाःपुंसि भवंति॥अयंस्थूलोराशिः॥अलक्तकःपादादिराग द्रव्यं॥कर्पासःसूत्रद्रव्यंसूर्योरविः॥कूर्पासःकंचुकं॥ सारथिःसूतः॥तरंगःकल्लोलः॥अलकःकेशरचना॥ समुद्गःसंपुटकः॥वराटःकपर्दकं॥७०॥ सैन्यायु धमंगलनगरवृन्तफलमूलहरितालबिंबमुकुट कुम्मलतस्तृतीयाप्रकृतिः॥पुंस्यवसथस्तथोद्गीथः संवीथःकालगीथश्च॥७१॥ सैन्यादीनितृतीया प्रकृतौजानीहि॥इदंसैन्यंबलं॥आयुधमस्त्रं॥मंगलं प्रशस्तं॥नगरंपुरं॥वृन्तंप्रसवबंधनं॥फलंमूलंहरि

तालंप्रसिद्धंविंवंप्रतिरूपंमुकुटेशिरोभूषणं॥कुडन
लंकलिका॥अवसथोद्गीथेपुंसिभवतः॥अयमवस
थः परिव्राजकः॥अयमुद्गीथः साम॥संवी थोघटिका
त्रयं॥कालगीथोपितदेव ॥७१॥ दर्पण मृदंगज
ठराः पुंस्युक्ताः कुंतकुतप धूमाश्च॥ व्रातहृददंडां
कुशकटाक्षसंग्रामविटपाश्च॥७२॥ एतेशव्दाःपुं
स्युक्ताः॥अयंदर्पणःआदर्शः॥मृदंगोमुरजः॥जठरः
कुक्षिः॥कुंतः प्रासः॥कुतपः शास्त्रं॥कालविशेषश्च
धूमोवन्हिसंभवः॥एतेपुंसिभवंति॥अयंव्रातःसंघः
ह्रदः सरः दंडआज्ञा॥लकुटश्च॥अंकुशः सृणिः॥क
टाक्षः अपांगदृष्टिः॥संग्रामोयुद्धं॥विटपोलतागुल्मः
॥७२॥ पामास्त्रियांनिगदितापुंसिवेमाकुणपकू
र्चौच॥कंदरयूथप्रोथाश्चवंशरेणुध्वजाश्चैव॥७३
॥ पामाशव्दः स्त्रियांकथितः॥इयंपामाविचर्चिका
॥कच्छूः वेमादयः पुंसिभवंति॥अयंवेमातंतुवायस्य
कुणपोमृतशरीरं॥कूर्चः श्मश्रु॥अयंकंदरः पर्वतस्यै
कदेशः॥युथः संघातः॥प्रोथोऽश्वस्यनासिकाविवरयो
रुपरिदेशः॥वंशोवेणुः॥रेणुःपांसुः॥ध्वजः केतुः॥७३
॥ केदारखंडप्रशमाश्चपुंसिनित्यंकपाटाश्च॥हे
लाकांचीलालासुधायुधाःस्युःस्त्रीयांप्रवेणीच॥७४
॥ एतेपुंसिभवंति॥अयंकेदारः क्षेत्रं॥खंडःइक्षुवि
कारः॥प्रशमोधान्यछेदनः कपाटोद्वाःपिधानं॥एते
स्त्रियांभवंतिइयंहेलाअनादरः कांचीमेखला॥लाला

श्लेष्मविकारः॥सुधाः मृतं॥युधायुद्धं॥प्रवेणीकेशर
चना॥७४॥ हानिग्लानिर्वापीविपणीसार्यश्चवेत
थास्वाहा॥लक्ष्मीमनःशिलोपानहःस्त्रियांस्थाणव
णुज्वराःपुंसि॥७५॥ एतेस्त्रियोभवंति॥हानिरपच
यः॥ग्लानिरशक्तिः॥वापीपुष्करिणी॥विपणीपण्यवि
थिका॥सारीपटोलिका॥स्वाहामंत्रावसानं॥लक्ष्म्या
दयःस्त्रियांभवंति॥इयंलक्ष्मीःश्रीः॥मनःशिलाधातु
द्रव्यं॥इयमुपानत्पन्नध्री॥स्थाणवादयःपुंसिभवंति
अयंस्थाणुःशिवःकीलश्च॥अणुःसूक्ष्मःज्वरोरोगः॥
॥७५॥ पुंसिस्यात्प्राग्वंशस्त्रिषुलिंगेषुशृंखलंवि
द्धिचमसस्तंभनिदाघःपशुशूकविटकाश्चपुंस्यु
क्ताः॥७६॥ प्राग्वंशशब्दःपुंसिभवति॥अयंप्राग्वंशो
यज्ञकुटी॥शृंखलंत्रिषुलिंगेषुजानीहि॥अयंशृंखलः
इयंशृंखला॥इदंशृंखलं॥एतेपुंसिकथिताःअयंचम
सः सोमपात्रं॥अयंस्तंभःनिदाघोघर्मः॥पशुर्गवादिः
शूकोधान्यादीनां॥विटकःपिंडकृतपरिमाणद्रव्यं
शोंडोवा॥७६॥ वल्कलकुंडलहिमचिन्हखलीन
ककुदगुह्यशुल्कशकलानि॥तीरोलूखलकवचा
निचविद्यादितरज्ञानो॥७७॥ वल्कलादीनिनपुंस
केजानीयात्॥इदंवल्कलंवृक्षत्वक्॥कुंडलंकर्णभू
षणं॥हिमंतुहिनचिन्हमंकः॥खलीनं॥कंडिका॥क
कुदंवृषभस्य॥गुह्यंगोप्यस्थानं॥शुल्कंशून्यस्थानं॥
शकलंखंडः॥तीरंनदीकूले॥उलूखलंधान्यादिस्रो

दनं॥कवचंसन्नाहः॥७७॥ मंडलकेसरभांडोत्तरी
यसोपानकल्मषानि ॥ प्रादेरंतंनपुंसकेसहकुंटु
बपुलिनाभ्यां॥७८॥ एतेनपुंसकेभवंति॥इदंमं
डलंसूर्यस्य॥केशरंकिंजल्कः॥भांडमुपकरणद्रव्यं
उत्तरीयंप्रावरणं॥सोपानंखंडखंडिका॥कल्मषंपापं
अघंपापंच॥प्रशब्दादेरंतरंशब्दंनपुंसकेविद्धि॥इ
दंप्रांतमतएवानुपसर्गस्तुपुंस्येवांतशब्दः॥कुटुंब
पुलिनशब्दाभ्यांसहनपुंसके॥इदंकुटुंबंगोत्रवर्गः इ
दंपुलिनंद्वीपं॥७८॥ स्थालीसभाजराणां स्त्रीत्वंस्थ
ल्याश्ववीच्याश्च॥छविकट्योर्मंजर्यावल्याश्चैवं
विजानीयात्॥७९॥ स्थाल्यादीनांस्त्रीत्वंभव
ति॥इयंस्थालीरंधनभांडं॥सभागोष्ठी॥जरावृद्धत्वं॥
स्थलीउच्चनिर्जलोदेशः॥वीचीतरंगः॥छविर्लावण्यं
॥कटिःश्रोणी॥मंजरीवृक्षस्य॥वल्लीलता॥७९॥
शिल्पंछर्दिस्त्वन्नंशमलमरकतपलालकच्छाणि
॥मंदिररिक्थेचनपुंसकेमंदुरांतुस्त्रियांविद्धि॥
॥८०॥ एतेनपुंसके भवंति॥इदंशिल्पंकलादि
कंकर्म॥छर्दिर्वांतिः॥अन्नंभक्ष्यं॥शमलममेध्यं म
रकतंरत्नं॥पलालंधानादीनां॥कच्छंकक्षं॥मंदिरंगृ
हं॥रिक्थंद्रव्यंमंदुराशब्दंस्त्रियांजानीयात्॥इयंमंदुरा
वाजिला॥८०॥ कल्ककृमिमुन्यंगारवप्रग्रहहो
मर्षिपक्ष्मरेफाः॥मंडकरंडवरंडाश्चपुंसिशपथा
वरीषोच॥८१॥ एतेपुंसिभवंतिअयंकल्कंपापं॥दं

भश्च॥कृमिःकीटः॥मुनिस्तपस्वी॥अंगारःकाष्ठस्य
वप्रःप्राकारः॥ग्रहउपरागः॥होमोमंत्राहुतिः॥ऋषि
स्तापसः॥यक्ष्मारोगः रेफोवर्णविशेषः॥अधमश्च।
मंडोन्नविकारः॥करंडःकुशभांडः॥वरंडःकाष्ठविशे
षः॥शपथःप्रत्ययकरणं॥अंबरीषोभ्राष्टः॥८१॥ म
थुरातनुस्तनूर्वर्तिनीसूचियवागूर्वर्णिनिकाशा
शार्करास्त्रियांपुंसितर्कश्च॥८२॥ एतेस्त्रियांभ
वंति॥इयंमथुरानगरी।तनुःशरीरं॥तनूस्तदेव॥व
र्त्तिनीकाष्ठोद्भवंशब्दसाधनं॥सूचीमूलंपापस्य।य
वागूःअन्नविकारः॥वर्णिःसर्णिः॥निकाशाकर्षवि
कारः॥शार्करागुडविकारः॥तर्कःपुंसिभवति॥अयं
तर्कउहः॥चशब्दःपादपूरणे॥८२॥ वंधुरविषा
णयोस्त्रिकंभवेत्प ल्वलंतृतीयंस्यात्॥शकटोशी
रकुतूहलशरावहूंदानिजानीहि॥८३॥ त्रिक
मितिलिंगत्रितयं॥अयंवंधुरः॥इयंवंधुरा॥इदंवं
धुरंउत्तमांसं॥अयंविषाणःइयंविषाणं॥शृंगंपल्व
लंतृतीयंनपुंसकमित्यर्थः॥इदंपल्वलं॥अल्पस
रः॥एतानिनपुंसकानिजानीहि॥इदंशकटंयानं॥
इदंमुशीरंवीरणमूलं॥कुतूहलंकुतुकं॥शरावंमृन्म
यभाजनं॥हूंदंसमूहः॥८३॥ यूकोल्कामुस्तौष
धिवर्त्तिभृकुटयःस्त्रियांमुदिताः॥वाल्मीकध्वर
निर्यूहव्यूहमुस्तकाःपुंसिकुंभश्च॥८४॥ एतेस्त्रि
यांमुदिताः॥इयंयूकामस्तककृमिः॥उल्कासंघात

द्रव्यं॥दग्धकाष्ठंच॥शुक्तिर्जलसंभवं॥ओषधिःफलपाकांता वृक्षविशेषः॥वर्त्तिर्दीपस्य॥भ्रुकुटिर्भ्रूभंगः पुष्परचनावा॥वाल्मीक्यादयः पुंसिभवंति॥यथावाल्मीकिः ऋषिः॥मृत्कूटश्च॥अध्वरोयागः निर्यूहश्चंद्रपाणिः व्यूहःसमूहः॥प्रभूतःपुस्तकोगंधद्रव्यंच कुंभोघटः ॥८४॥ केयूरतरलतूर्यांगदानिनित्यंनपुंसके विद्धि॥पुंसिगवाक्षंविद्यात्स्त्रियांश्यामाभुशुंडीभांडी च॥८५॥ केयूरादीनिनपुंसकेजानीहि॥इदंकेयूरंबाहुभूषणं॥इदंतरलमलंकारः॥तूर्यंवादित्रं॥ ॥अंगदंबाहुभूषणं॥गवाक्षशब्दंपुंसि विद्याज्ज्ञानीयात्॥यथाअयंगवाक्षोवातायनः॥एते शब्दाःस्त्रियांभवंति॥इयंश्यामास्त्री॥भुशुंडीआयुधं भांडीभिंडिपालः॥८५॥ भवतोऽपजनोपपदावंगपदौपुंसिनित्यमिमनिच्च॥रक्षणकोष्ठभ्रेषाश्च सहनिपातोपसर्गाभ्यां॥८६॥ अपोपपदेअंगशब्दः जनोपपदेपदशब्दश्चपुंसिभवतः॥यथाअयमपांगोनेत्रांतः॥अयंजनपदोलोकः॥पृथ्वादिभ्यइमनिच्॥अनइत्यनुवर्त्तते॥टेरितिटिलोपः॥स्वरितोहलादिर्लघोरितिरेफादेशः॥इमनिच्प्रत्ययांताःपुंसि भवंति॥अयंप्रथिमा॥गरिमा॥लघिमा॥दृढिमा॥इत्येवमादयः॥एतेपुंसिभवंति॥अयंरक्षण स्तरुस्थानं॥अयंकोष्ठोहरिशाला॥अयंभ्रेषोऽन्यायः निपातश्चादिः॥उपसर्गःप्रादिः॥८६॥ स्थावराणत्र्यद्

घुठग्यक्वुञस्तु॥यदिवाभावेकर्मणिस्युस्तदेषां
नियतानपुंसकता॥८७॥ अण्॥अञ्॥यत्॥यु
ठक्॥यक्॥ वुञ्॥एतेप्रत्ययाः भावेकर्मणिवायदि
स्युस्तदातदंतानामेतेषांनपुंसकत्वंजानिहि॥यथा
हायनांतयुरोहितादिभ्योऽण्॥ द्विहायनस्यभावः॥
कर्मवा द्वैहायनं॥यूनोभावः कर्मवायौवनं॥नघ्रत
इतिनलोपेप्राप्तेइत्यणपत्यइतिप्रकृतिभावःस्था
वरंयजमानं॥इगंतत्वेनलघूपध इत्यण्॥मृदोर्भा
वः कर्मवामार्दवं॥पाटवःलाघवं॥आर्जवं॥अजप्रा
णिजातिभिर्जातिवयोवचनोगोत्रादिभ्योऽञ्॥अश्व
स्यभावः कर्मवाआश्वं॥गार्दभं॥वयोवचनात्कौमा
रं॥पौत्रं॥उद्गात्रादेः॥इदमौद्गात्रं॥सख्युर्य इतियः
सख्युर्भावः कर्मवासख्यं॥स्तेयन्नलोपश्चेतियत्प्र
त्ययः॥स्तेयस्यभावः कर्मवास्तैन्यं॥होत्रादिभ्योघुः
होतुर्भावः कर्मवाहोत्रीयं॥पोत्रीयं॥अंगात्रीयं॥दुहि
त्रीयं॥ठक्॥कपेर्भावः कर्मवाकापेयं॥रोहितादिभ्यो
यक्॥बृहस्पतेर्भावः कर्मवाबार्हस्पत्यं॥सैन्यापत्यं
वुञ्॥योपधाद्गुरूपोत्तमाद्वुञ्॥रमणीयस्यभावः॥
कर्मवारामणीयकं॥अहोरूपमित्यादिकेद्रष्टव्यं॥
॥८७॥ व्रजशूलौपुंसिनपुंसकेचमृधं॥कंबलतोम
रमुकुलकंदुकाःपुंसिभास्त्रास्त्री॥८८॥ व्रजशूल
शब्दौपुंसिभवतः॥अयंव्रजः अयंशूलः॥मृधंनपुंस
केविद्धि॥इदंमृधंयुद्धं॥एतेशब्दाः पुंसिभवंति॥अयं

कंबलः ऊर्णावस्त्रं॥ अयं तोमरः शरप्रहरणं॥ मुकुलः कुड्मलः॥ कुंटुकोयानं॥ भास्त्राशब्दः स्त्रियांभवति इयं भास्त्राकमलपत्री॥ ८८॥ आकारेकारांतं स्थावरं जंगमं स्त्रियांभवेन्नित्यं॥ क्वचिदूकारांतमपिप्रोक्तं वापुंसियोनिः स्यात्॥ ८९॥ आकारांतमीकारांतं यत्स्थावरंजंगमं तत्सर्वं स्त्रीलिंगंभवति॥ आकारांतंस्थावरं यथा॥ इयं गंगा यमुना॥ नर्मदा॥ ईकारांतं शरावतीसरस्वतीत्यादि॥ आकारांतंजंगमंयथा॥ इयं देवदत्ता॥ यज्ञदत्तावलाका॥ अंबिकेत्यादि॥ ईकारांतं॥ कुमारीगौरी॥ ब्राह्मणी॥ हस्तिनी॥ श्वश्रूः॥ वधूः॥ क्वचिदितिकिं॥ करपूः॥ धान्यलूः॥ अयंयोनिः इयंयोनिः॥ ८९॥ वाग्विषयस्याचमहतः संक्षेपतएष विधिरुक्तः॥ यन्नोक्तमत्रसद्भिस्तल्लोकतएवबोद्धव्यः॥ ९०॥ इतिश्रीमदखिलवाग्विलासमंडितसरस्वतीकंठाभरणानेककविशरणश्रीनरपतिसेवितविक्रमादित्यकिरीटकोटिनिघृष्टचरणारविंदाचार्यवररुचिविरचितोलिंगविशेषविधिः समाप्तः॥

श्रीगणेशायनमः॥गणितस्यनाममालांवक्ष्येगुरुप्र
सादतः॥ बालानांहिसुबोधायहरिदत्तोद्विजाग्रणीः॥१
॥अथनक्षत्रनामानि॥अश्विनीदस्रभंदास्त्रनासत्यं
तुरंगंहयम् भरणीयमभंयाम्यंप्रोक्तंसूतकमांतकं
॥२॥कृत्तिकाग्निभमाग्नेयंकृशानंहव्यवाहनंअनलं
दहनर्क्षंचवह्निभंचहुताशनं॥३॥रोहिणंरोहिणीब्रा
ह्मंप्राजापत्यंचधातृभं मृगशीर्षमृगशिरंसौम्यंमृ
गश्चशोभनं॥४॥सैंदवंच द्रुशशिभमिंदुचंद्रभमुच्य
तेआर्द्राशिवंशिवर्क्षंचशिवभंरौद्रमीश्वरं॥५॥ईशं
चशांकरंसर्वंशंकरंशशिशेखरं पुनर्वसुपुनःप्रोक्त
मादित्यंचतथादिति॥६॥पुष्यंतिष्यगुरुभंचअश्ले
षासर्पदेवतंसार्प्यभंसमघाचपित्तदेवतं॥७॥पितृभं
पितरंपित्र्यंपूर्वाफाल्गुनिभाग्यभं भगंभाग्यंतथा
प्रोक्तोत्तराफाल्गुनिचार्यभं॥८॥उग्रार्यमास्ततोह
स्तअर्कंचेवतथार्कभंकरंसविस्तसूर्यर्क्षंचित्रात्वा
ष्ट्रंचत्वष्टृभं॥९॥सुरवार्द्धकिसंज्ञंच त थास्वाति
चमारुतंअनिलंवायुनक्षत्रंविशाखेंद्राग्निदेव
तं॥१०॥शक्राग्निभद्विदैवंचमैत्रंमित्रानुराधकं ज्ये
ष्ठाशाक्रंचशाक्रर्क्षंपौरुहूतंतथैंद्रभं॥११॥तथैव
वासवर्क्षंचमूलनैरृतिनिर्ऋति पूर्वाषाढातथा
पूषात्तोयभंचतथांबुभं॥१२॥ऊषाचैवोत्तराषाढा
विश्वंचविश्वदेवतं श्रवणंवैष्णवंविष्णुर्गोविंदंह
रिभंश्रुतिः॥१३॥वासुदेवंधनिष्ठाचश्रविष्ठावासवं

वसु शतभिषा वरुणं चैव वारुणं शततारका ॥१४॥ अजमाजैपदं पूर्भं तथाजचरणं मतं तथोत्तराभाद्रपदमाहिर्बुध्नं च भं स्मृतं ॥१५॥ रेवती पूषभं पौष्णं पूषमांत्यं च पौष्णभं पूषं चैवांत्यसंज्ञं तु कथितं शास्त्रकोविदैः २६॥ इति नक्षत्र नामानि अथ नक्षत्रसंज्ञाधिष्ण्यं भमृक्षं नक्षत्रं तारका इति गद्यते ॥ इति नक्षत्रसंज्ञा अथैकाद्यंकानां संज्ञा ॥ एकेंदु रजनीनायकभु चंद्रं च मेदिनी ॥ धरा रूप निशानाथ रजनीशनिशाकर ॥१७॥ वसुधा सर्वरी कांत शशांका वनयस्तथा यत्र भूमीदु नामानि प्रोक्तानत्रैकसंज्ञका ॥१८॥ द्विनेत्र लोचनः पक्षा द्स्रा क्षियमवाहवः यमला श्विभुजा पाणि कर युग्मा द्योमताः २०॥ कृशानु गुण रामाग्नि पावकानल वन्हयः ऊताशनास्त्रयस्ति संप्रोक्ता श्च त्रिविनावुधैः ॥२१॥ चतस्त्रश्चतुरो वेदाश्चागराब्धि कृताश्चतुः समुद्रांभोनिधि युगाश्रुतिनीररगीश्वराः ॥२२॥ शरमार्गणबाणेषु सायकानिलमारुतः समीरणाक्षपवनाः पंचवातास्तथाशुगाः ॥२३॥ षष्ठसंज्ञा षड्डत्वंगरसाप्रोक्ता मनीषिभिः मुनिपर्वत शैलादि सप्ताच लनगास्मृताः ॥२४॥ संज्ञाहयाश्वत्तुरगा सप्ता गमुनयोपिच ॥ अष्टानीं वसुनागेभहस्ती दंतपष्टकुंजराः ॥२५॥ गोनंदांकनवानांच ग्रहखेटाखगास्तथा शून्याभ्रगगनं व्योमखमंवरनभोवियत् ॥२६॥ आकाशनाम यत्रैव तत्र शून्यमु

दाहलैककुपदिककाष्ठाचदससंज्ञासदैवहि॥२७॥
शिवैकादशरुद्राश्चसर्वेशाभवशंकरायत्रेश्वरस्य
नामानितत्रैकादशाकीर्त्तिताः॥२८॥भास्करादित्य
सूर्यार्कद्वादशंचदिवाकरः॥रविःसहस्रकिरणदिन
कृद्**मा**नवोध्रुवं॥२९॥बुधैर्द्वादशविज्ञेयायत्रनामभ
वेद्रविःविश्वेत्रयोदशःप्रोक्तःइंद्रशक्रश्चतुर्दशः॥
॥३०॥आखंडलःसुरपतिःसुरेशमनुवासवाः तिथि
पंचदशःप्रोक्तानृपभूप तिषोडशाः॥३१॥ज्ञेयाषो
डशासंज्ञावैनाम स्याद्यत्रभूपतेः॥अथसप्तदशा
त्यष्टितत्रैवाष्टदशाधृतेः॥३२॥द्वाविंशतेराकृतिश्च
नखसंज्ञास्तुविंशतिः सिद्धाजिनाश्चतुर्विंशतत्त्वं
चपंचविंशतिः॥३३॥सप्तविंसतिनक्षत्रंधिष्ण्यर्क्षो
डुश्चकथ्यते दंतारदाश्चद्वात्रिंशतसंज्ञोक्तामुनि
संमतं॥३४॥त्रिदशादेवत्तादेवास्त्रयस्त्रिंशत्सुरा
बुधाः त्रिवि ष्टपाश्चविबुधासंज्ञाकानांसदास्फुटा
॥३५॥इत्यंकसंज्ञा॥अजक्रियोमेषसंज्ञाप्रोक्ताबुधै
श्चगोवृषं मिथुनोवैणिकोयुग्मोप्रोक्तोचार्कश्चकीट
कः॥३६॥मृगारिमृगराट्सिंहोमृगेंद्रःकेसरीहरी॥
नारीस्त्रीयुवतीयोषित्कन्याचप्रमदांगना॥३७॥व
णिक्तुलावाणिजश्चवृश्चिकोलिसरीसृपः॥चापो
धनुश्चधनुषोकोदंडकार्मुकोपिच॥३८॥तथैव
विबुधैःप्रोक्तोनक्रश्चमकरोमृगः॥घटकुंभश्चक
लशोमत्स्योमीनोझषोमत्तः॥३९॥इतिराशिसंज्ञा

प्रथमंतनुश्वमूर्त्तिराद्यंदेहशरीरकेंद्रविणंधनंहि
तीयंचद्रव्यंचसमर्थविधिः॥४०॥कुटंवंस्वापंचसु
खंविभवश्चैववैभवं सहजंसहस्तृतीयंचपराक्र
मंसहोदरं॥४१॥विक्रमंत्रिश्चदुश्चिक्यंचतुर्थंहितु
कंजलंजननीमातृपातालंवंधुतूर्यंसखंसुहृन्॥
॥४२॥रसातलांबुवेश्मोक्तंपंचमंसुतमात्मजंसंता
नंबुद्धिसंज्ञाचविद्याधीश्चैवनंदनं४३॥अरिःषष्ठंविप
क्षंचद्वेषःशत्रुश्वषट्द्विषंविरोधीवैरिसंज्ञंचषट्
कोणंचसप्तकं॥४४॥कलत्रंसप्तमंचास्यद्यूनंचस्म
रमन्मथंजामित्रंमदनाह्वानंकामंततोष्टमंमृतिं॥
॥४५॥निमीलनंचनिधनंरंध्रमृत्युर्विनाशनम्
छिद्रंवसुततोभाग्यंधर्मंचनवमंतपः॥४६॥त्रिको
णंचतथाकाशंव्यापारंदशमंविपत्कर्मावरत्वं
व्योमंचगगनंपुष्करंनभः॥४७॥एकादशंभवंला
भंप्राप्तिमापमुदाहृतं अंत्यंव्ययंद्वादशंरिष्फंप्रा
हुर्मुनीश्वराः॥४८॥इतिद्वादशभावानांसंज्ञा॥
अन्यच्चचतुर्थमष्टमंप्रोक्तंचतुरस्रंसदैवहिदशे
कादशषष्टस्त्रिसंज्ञाश्चोपचयानिच॥४९॥अन्या
न्यपचयानिस्युर्गर्गाद्यैर्गदितानिवै कंटकंकेंद्रमि
त्युक्तंतथाबुधैश्चतुष्टयं॥५०॥द्यूनांबुदशमेका
निततःपणफरंस्मृतंद्विपंचाष्टमलाभानांततश्चा
पोक्लिमंभवेत्॥५१॥व्ययारिसहधर्माणांत्रिको
णनवपंचमं॥इतिकेंद्रत्रिकोणपणफरआपो

दाहृतंकक्रुपद्दिककाष्ठाचदससंज्ञासदेवहि॥२७॥
ष्प्रिवैकादपारुद्राश्वसर्वेप्राभवपांकरायत्रेश्वरस्य
नामानितत्रैकादपाकीर्त्तिः॥२८॥भास्करादित्य
सूर्यार्कद्वादपांचदिवाकरः॥रविःसहस्रकिरणदिन
कृद्[मा]नवोध्रुवं॥२९॥वुधैर्द्वादपाविज्ञेयायत्रनामभ
वेद्रविः विश्वेत्रयोदपाः प्रोक्ताः ईंद्रपाक्रश्चतुर्दपाः॥
॥३०॥आखंडलः सुरपतिः सुरेपामनुवासवाः तिथि
पंचदपाः प्रोक्तान्रृपभूप तिषोडपाः॥३१॥ज्ञेयाषो
डपासंज्ञावैनाम स्याद्यत्रभूपतेः॥अथसप्तदपा
त्यष्टितत्रैवाष्टदपाधृतेः॥३२॥द्वाविंपातेएकृतिश्च
नखसंज्ञास्तुविंपातिः सिद्धाजिनाश्चतुर्विंपात्तत्वं
चपंचविंपातिः॥३३॥सप्तविंसतिनक्षत्रंधिशयर्क्षो
डुश्चकथ्यते दंतारदाश्चद्वात्रिंपातसंज्ञोक्तामुनि
संमतं॥३४॥त्रिदपादेवतादेवास्त्रयस्त्रिंपात्सुरा
वुधाः त्रिवि ष्टपाश्चविवुधासंज्ञाकानांसदास्फुटा
॥३५॥इत्यंकसंज्ञा॥अजक्रियोमेषसंज्ञाप्रोक्तावुधै
श्चगोवृषं मिथुनोवैपिकोयुग्मोप्रोक्तोकर्कश्चकीट
कः॥३६॥मृगारिमृगराट्सिंहोमृगेंद्रकेसरीहरी॥
नारीस्त्रीयुवतीयोषितकन्याचप्रमदांगना॥३७॥व
णिकतुलावाणिजश्चवृश्चिकोलिसरीसृपः॥चापो
धनुश्चधनुषोकोदंडकार्मुकोपिच॥३८॥तथैव
विवुधैः प्रोक्तोनक्रश्चमकरोमृगः घटकुंभश्चक
लपोमत्स्योमीनोभ्कषोमत्तः॥३९॥इतिराशिसंज्ञा

प्रथमंतनुश्चमूर्त्तिराद्यंदेहशरीरकेंद्रविणंधनंद्वि
तीयंचद्रव्यंचसमर्थविधिः॥४०॥कुटंवस्वाप्तंचसु
खंविभवंश्चैववैभवं सहजंसहस्तृतीयंचपराक्र
मंसहोदरं॥४१॥विक्र मंत्रिश्चदुश्चिक्यंचतुर्थंहिवु
कंजलंजननीमातृपातालंवंधुतूर्यंसखंसुहृत्॥
॥४२॥रसातलांवुवेश्मोक्तंपंचमंसुतमात्मजंसंता
नंवुद्धिसंज्ञाचविद्याधीश्चैवनंदनं४३॥अरिः षष्ठंविप
क्षंचद्वेष्यः शत्रुश्चषट्द्विषंविरोधीवैरिसंज्ञंचषट्
कोणंचसप्तकं ॥४४॥कलत्रंसप्तमंचाथद्यूनंचस्म
रमन्मथंजामित्रंमदनाह्वानंकामंततोष्टमंमृतिं॥
॥४५॥निमीलनंचनिधनंरंध्रमृत्युर्विनाशनम्
छिद्रंवसुत्ततोभाग्यंधर्मंचनवमंतपः॥४६॥त्रिको
णंचत्तथाकाशंव्यापारंदशमंविपत्कर्मावरांव्यं
व्योमंचगगनंपुष्करंनभः॥४७॥एकादशंभवंला
भंप्राप्तिमापमुदाहृतं अंत्यंव्ययंद्वादशमंरिष्फंप्रा
हुर्मुनीश्वराः॥४८॥इतिद्वादशभावानांसंज्ञा॥
अन्यच्चचतुर्थं मष्टमंप्रोक्तंचतुरस्रंसदैवहिदशै
कादशषष्ठस्त्रिसंज्ञाश्चोपचयानिच॥४९॥अन्या
न्यपचयानिस्युर्गर्गाद्यैर्गदितानिवै कंटकंकेंद्रमि
त्युक्तंतथावुधैश्चतुष्टयं॥५०॥द्यूनोवुदशमेका
नितत्तःपणफरंस्मृत्तंद्विपंचाष्टमलाभानांततश्चा
पोक्लिमंभवेत्॥५१॥व्ययारिसहधर्माणांत्रिको
णनवपंचमं॥इतिकेंद्रत्रिकोणपणफरआपो

क्रिमसंज्ञा॥ आलयभुवनंगेहंगृहंक्षेत्रंचमंदिरं
॥५२॥ स्थानंचसदनंवेश्मन प्यावासंविनिर्दिशे
त् इतिभुवनसंज्ञाआदित्यः सवितासूर्यस्ति
ग्मांशुर्दिनकृद्रविः॥५३॥ सहस्रकिरणः पूषाप्रद्योत
नोदिवाकरःपतंगस्तपनोमित्रोमार्तंडस्तरणिर्भगः
॥५४॥ विकर्त्तनः सप्तसप्तिः सप्ताश्वद्युमणिः खगः वि
रोचनोदिनकरोदिनमणिस्तुरहर्पतिः॥५५॥ दिवां
पतिर्दिनेशश्चदशसतांशुरर्यमाविवस्वानिनांशुमा
लिंप्र भाकरश्चभास्करः॥५६॥ अर्कस्त्वथीतनुर्भानु
स्तिग्मांशुर्मिहिरोहरिः॥५७॥ इतिसूर्यनामानि चंद्र
मारजनीनाथोरोहिणीवल्लभोविभुः दोषाकरोनिशा
नाथोप्रालेयांशुनिशापतिः॥५८॥ अब्जोराजाशशि
श्चंद्रोमृगांकरजनीकरः रजनीशोयामिनीशःक्षपा
करोनिशाकरः॥५९॥ ईंदुर्निशीथिनीनाथस्पेशो
सर्वरीपतिः शशांकः शीतरश्मीश्चसोमोस्त्रिनयनो
मलः॥६०॥ शीतकिरणोहिमरश्मिः शीतद्युत्तिर्हिमद्युति
राजश्वेतरश्मिः शीतांशुर्यामिनीपतिः॥६१॥ भेशोहि
मरश्मिमालि धिष्ण्येशस्तारकाप्रभुःउडुपोरोहि
णीकांतोद्विजेंद्रोरोहिणीप्रियः॥६२॥ इतिचंद्रनामानि
मंगलोसरुकभूमिसुतोलोहितोभूमिनंदनः क्षोणिजो
मेदिनीसूनुर्भूमिजोधरणीसुतः॥६३॥ क्षितिजः पृथि
वीसूनुर्मेदिनीनंदनः कुजः धरासुतोधरणिजोवक्रो
भूमिजभूमिभूः॥६४॥ धरात्मजोधरासूनुरक्षोणी

भश्वरःतथा गगनेवर्त्मीचद्युगामीचमरुत्पथी॥७७
इतिग्रहनामानिचैत्रादि नाममासांनांवुधैःसंज्ञाप्र,
कीर्त्तितामधुश्चमाधवःशुक्रशुचिर्नभोनभस्यंवे॥
॥७८॥ईषूर्जौसहःसहस्योतथातपतपस्यको भाद्र
पदंप्रोष्ठपदः प्रोक्तश्चाद्येर्मुनीश्वरैः॥७९॥इतिमा
सनामानिमासोदर्शावधिश्चांद्र सौरोर्कराशिचारत
सावनोदिनत्रिंशाद्भिर्नाक्षत्रश्चंद्रभाक्रमात्॥८०॥इति
चतुर्विधमाससंज्ञाअक्षरैः षष्ठिभि-र्दीर्घैःपलमेकंवु
धैःस्मृत्तम्पलैश्चखरसैर्नाडीप्रमाणंभवतिस्फुटं॥
॥८१॥नाडीघटीचघटिकाविनाडीफलमीरितम्दि
नस्यरात्रेस्तूर्यांशोसोयामःप्रहरोच्यते॥८२॥इतिघटी
पलप्रहरसंज्ञा॥वासरोदिवसोघस्त्रस्तथाहोद्युर्दिन
स्मृतंइतिदिनसंज्ञा निशीथिनीक्षपारात्रिंप्रोक्तान
क्तंचशर्वरी॥८३॥दोषानिशात्रियामाचरजनीयामि
नीतमी इतिरात्रिसंज्ञादिनार्द्धोह्नत्तमध्यान्हंरात्र्यर्द्धा
त्तुमहानिशा॥८४॥निशीथोमध्यरात्रिश्चरात्रिशेष
स्ततःपरंत्तथेवरात्रेःपूर्वार्द्धंसूर्यास्ताच्चगत्तानिशा॥
॥८५॥सूर्योदयाच्चमध्याह्नंयावत्पूर्वान्हसंज्ञकंतथा
मध्याह्नतःपश्चाद्दिनशेषेपराह्नकं॥८६॥ईतिपूर्वा
ह्नपरान्हसंज्ञा दिनरात्रेरहोरात्रंप्रोच्यतेषष्ठिनाडि
कंदिनैःपंचदशामितैःपक्षेकोपिनिगद्यते॥८७॥प
क्षःशुक्लःसितःश्वेतोवलक्षोवहुलोत्तरःअसितोवहु
लःकृष्णोशुक्लेत्तरसितेत्तरः॥८८॥इतिपक्षसंज्ञाप

राशिभिर्भार्द्धचक्रार्द्ध प्रवदेतिच राशो रर्द्धं भवेद्धोरा द्रेष्का णस्त्रिलियां शकः तथैवार्कांश को राशि द्वादशांशमुदा हृता॥ २॥ राशेस्त्रिंशन्मितो भाग स्त्रिंशांशो विबुधैस्मृतः पूर्वा प्राचीत्तथैवेंद्री सुरेश दिशिरुच्यते ॥३॥ आग्नेयी व ह्निकोणाचतथावानलदिग्मतः यमदिग्दक्षिणायाम्या रक्षोदिग्नैर्ऋतिस्तथा ॥४॥ पश्चिमा वारुणी प्रोक्ता प्रती चीस्यादिशाजलावायव्यानिलामारुता चसौम्योदीचीं तथोनरा ॥५॥ ईशानीशिवदिग्रौद्री शांभवी शंकरस्य दिक् इतिदिग्नामानि राशयश्चरसंज्ञोक्तामृगाजतु लकर्कटा ६॥ कुंभालिवृषसिंहाश्चकीर्त्तिता स्थिरराश यः चापयुग्मझषाप्रोक्ताकन्याचद्विस्वभावका ॥७॥ इति चरस्थिरद्विस्वभावसंज्ञा कर्कादिराशिषट्कस्थेभा स्करेदक्षिणायनं रवौमृगादिषड्राशौ स्थिते चैवोत्तरा यणं॥ ८॥ इतिदक्षिणोत्तरायणसंज्ञा सूर्यस्यादुतरे गोलो मेषादिषद्भसंस्थिते याम गोलो भवेदर्के स्थिते षड्भिस्तुलादिभिः इतिउत्तरदक्षिणगोलसंज्ञा स्थिर राशौचसंक्रांतौ भानोर्दिस्सुपदातिसातथैव द्विस्वभा वाचखडशीतिमुखीभवेत् ॥१०॥ भानोर्मकरसंज्ञा च प्रोक्तोतरमभिधायनं क्रियतुलाविषुवतीसंक्रांतिर्गदि तार वेः॥११॥ इतिसंक्रांतिसंज्ञा मीनाजसंस्थितेभा नौवसंतर्तौउदाहृतः ग्रीष्मश्चवृषयुग्मस्थेवर्षाकर्क हरीस्थिते॥१२॥ कन्यातुलस्थेतपनेज्ञेयः शरदृतुः सदा हेमंतश्चालिचापस्थेशिशिरोमृग कुंभयोः॥१३॥

घटेष्वपि इतिसूर्यादीनांमूलत्रिकोणसंज्ञासिंहेनखांशाः
सूर्यस्यत्रिकोणः स्वगृहस्ततः ॥२४॥ वृषेभागास्त्रयः
स्वोच्चंविधोःपरं त्रिकोणकं मेषेकांशास्त्रिकोणंचध
रां:सूनोस्ततः स्वत्तः ॥२५॥ कन्यायांतिथयोभागाः
स्वोच्चंपंचततः परं त्रिकोणसंज्ञासोम्यस्यततः स्वगृ
हमुच्यते ॥२६॥ चापस्त्रिकोणपंचांशाःस्वक्षेत्रंचापरं
गु रोः शुक्रस्त्रिकोणत्तिथ्यंशास्तुलायांस्वालयंततः
॥२७॥ नवांशाश्वत्रिकोणोक्तं ततः स्वभव नेघटे इति
स्वगृहोच्चमूलत्रिकोणसंज्ञा कंडोलज्ञातिविप्रेणहर
दत्तेनधीमता नाम मालाकृताश्रेष्ठागुरोःप्रासाद
तोमया ॥२८॥ इतिश्रीहरिदत्ताचार्येणविरचितंगणि
तस्यनाममालासमाप्ता ॥

॥१३॥ ऐज्ञानामृतो भौतिकश्चाधरो दामोदरस्तथा॥ वा
गीशोवर्म भयदऐकारस्त्रिपुरस्तथा॥१४॥ ओसद्योजा
तोवासुदेव ऊर्द्ध्वदन्तस्त्रिमात्रकः॥ आप्यायनीमन्त्रना
थ ओकारोनागसञ्ज्ञकः॥१५॥ औसङ्कर्षणोनुग्रहेशो
मुरारिर्व्यापिनीतथा॥ अधोदन्तगतोमायीनृसिंहाङ्ग
स्तथोरसः॥१६॥ अंअक्रूरोव्योमरूपश्चप्रद्युम्नश्चन्द्र
संज्ञकः॥ अनुस्वारस्तथाविन्दुरङ्कारश्चशिरोव्ययः॥
॥१७॥ अः अनन्तश्चमहासेनोऽनिरुद्धोरसवर्णकः॥
कन्यास्तननिभस्सर्गोविसर्गश्चान्तिमस्वरः॥१८॥
कः क्रोधीशोधातृसञ्ज्ञश्चक्रीसृष्टिश्चकरादिगःवर्गादि
गःपादवेषःककारःकामगस्स्मृतः१९ खचक्रुधर्द्दिगदिच
ण्डिशाः खेटोदक्षिणकूर्परः॥ कैटभारिश्चमातङ्गःसं
हारःखार्णकस्स्मृतः॥२०॥ गस्मृतिःपञ्चान्तकश्शा
र्ङ्गीगणेशोमणिवन्धगः॥ गोमुखोगजकुम्भश्चगकार
स्सिंहसञ्ज्ञकः॥२१॥ घखड्गीशिवोत्तमोमेधादक्षिणा
ङ्गुलिमूलगः॥ घनोघनस्वरश्चैवघकारोङगादिमस्स्मृ
तः॥२२॥ ङसञ्ज्ञाकोरुद्रकान्तिश्चदक्षाङ्गुल्यग्रसंस्थि
तः॥ क्लीववक्रश्चभद्रेशोङकारश्चानुनासिकः २३
॥ चहलीकूर्मेश्वरोलक्ष्मीर्वामबाह्वादिगस्तथा॥ चि
त्रधारीचञ्चलश्चचकारस्संस्मृतोबुधैः॥२४॥ छए
कनेत्रश्चमुशलीवामकूर्परगोद्युतिः॥ त्रिविन्दुकस्त
थाचारीछकारस्त्लेष्मकाभिधः॥२५॥ जस्थिरराजप
न्नोजपजश्शूलीचचतुराननः॥ मणिवन्धगतोवामे

जकारोजनकोत्तमः॥२६॥झस्थितिः पाशीतथाजेशो
वामाङ्गुलितलस्थितः ॥स्वस्तिकस्त्याणुसञ्ज्ञश्चझकारो
ज्ञान्तसञ्ज्ञकः॥२७॥ञवामाङ्गुल्यग्रतःसिद्धिरंकुशी
सर्वसञ्ज्ञकः॥मातङ्गोह्यनुगासनश्चञकारश्चनिरञ्ज
नः॥२८॥टजरामुकुन्दस्तोमेशोदक्षपादादिगोमुखः
गजाङ्कुपाश्चवालेन्दुरमृताद्यष्टकस्स्मृतः॥२९॥ठला
ङ्गलीशोनन्दजश्चपालिनीचकमण्डलुःदक्षजानुग
तस्थापीठकारस्स्थ विरस्स्मृतः॥३०॥ड नन्दीक्षान्ति
दारकश्चडामरोदक्षगुल्फगः॥व्याघ्रपादश्शुभाङ्घ्रि
श्चडकारस्तोमरोमतः॥३१॥ढऐश्वरीचार्द्धनारी
शोनरश्शाखान्तराकृतिः॥दक्षपादाङ्गुलीमूलोढले
ढक्कोढकारकः॥३२॥णउमाकान्तोनरकजिद्रति
र्दक्षपदाग्रगः॥निर्वाणस्त्रिगुणाकारस्त्रिरेखोणस्स
मीरितः॥३३॥तवामोरूमूलनिलयआषाढीकामिका
हरिः॥तीव्रश्चतरलोनीलस्तकारःकीर्त्तितोवुधैः॥३४
थदण्डीशोवरदःकृष्णोवामजानुगतस्स्मरः॥शौरीचा
पिविशालाक्षस्थकारःपरिकीर्तितः॥३५॥दसत्योत्री
शोह्लादिनीचवामगुल्फगतस्तथा॥शूलीकुवेरोदात
चदकारोधादिमस्स्मृतः॥३६॥धमीनेशस्सात्वतश्री
तिर्वामपादाङ्गुलीगतः॥धनेशोधरणीशश्चधकारोदा
न्तिमस्स्मृतः॥३७॥नपीशोरिमेषेश्वरीदीर्घावामपादा
ग्रसंस्थितः॥नरोनदीनोनादीचनकारश्चानुनासिकः
॥३८॥पतीक्ष्णाचलोहितश्शूरोदक्षपार्श्वश्चपार्थिवः॥

पश्च शीनान्तिमःफादि पकारोपिप्रकीर्त्तितः॥३९॥ फ
जनार्दनी शिखीरौद्रीवामपार्श्वकृतालयः॥फट्कारः
प्रोच्यतेसद्भिःफकारःपान्तिमस्स्मृः॥४०॥ वकगलरुडो
भूधरश्चभयाष्टगतस्तथासुरसोवज्रमुष्टिश्चव
कारोभादिर्मोमतः॥४१॥ भविश्वमूर्त्तिर्द्दूरराडेशी
निद्रानाभिगतोपिच॥भ्रुकुटीचभरद्वाजोभकारश्च
जयापहः॥४२॥मवैकुण्ठश्चमहाकालस्तन्द्रीजठर
संस्थितः॥मन्त्रेशीमराडलोमानीविषस्सूर्योमकार
कः॥४३॥यक्षुधावालाचवायुस्त्वग्धृतश्चपुरुषोत्त
मः॥यमुनोयामुनेयश्चयकारोयान्तिमस्स्मृतः॥४४॥
रःक्रोधिनीचभुजङ्गेशीज्वालीरुधिरपावकौ॥रोचि
ष्मान्दक्षिणांशश्चरुचिरोरेफईरितः॥४५॥लक्रिया
ककुद्गतोमांसंपिनाकीभूर्वलानुजः॥लम्पटःशक्र
सञ्ज्ञश्चवाद्योरान्तोलकारकः॥४६॥ववालोवामां
सनिलयोमेदोवारिदवारुणौ॥उत्कारीजलसञ्ज्ञश्च
खड्गीशोपिवकारकः॥४७॥शमृत्युर्वकोवृषघ्नश्च
हृदोदस्सकरस्थितः॥पाडुक पौस्थिसञ्ज्ञश्चशकौ
रोविद्धिरीरितः॥४८॥षवृषःश्वेतेश्वरःपीतामज्जाः
हृद्वामवाहुगः॥षडाननश्चकारश्चकीर्त्तितश्चवुधैः
स्वरः॥४९॥सभृगुश्वेतस्तथाहंसोहृदोदक्षिणपाद
गः॥समयस्तामगश्चुक्रस्सङ्गतिस्सापीकपशषी॥५०
हनभोवराहोनकुलोहृदोवामपदस्थितः सदाशि
वोरुण प्राणोहकारश्चहयाननः॥५१॥ लंहृदयान्त्रा

भिसंस्थानश्शिवेशोविमलोसितः॥ लघुप्रयत्नश्चो पान्त्योलुङ्कारःप्रोच्यतेबुधैः॥५२॥ क्षःसंवर्त्तकोनृसिंहश्चहृदयान्मुखसंस्थितः॥अनन्तःपरमात्माचवज्रकायोऽन्तिमाक्षरः॥५३॥ इतिहादिमतेमातृकाकोषःसमाप्तः

॥श्रीफतहनारायणसिंहनाम्नोवाराणसीवासविनोदभाजः नानाविधैश्वर्यचयेनचीर्णोनितान्तकान्तेचनिशान्तवर्ष्म १ त्रिपुरभैरवीसन्निधौनिधौविविधबुद्धिमत्संहतेरपिस्वस्वसुक्ष्माधारिभू १९८७ मितेशकवरेकुवौमासिशुक्रके २ पूर्णिमादिनेपूर्णमुद्रणापुस्तकात्मनायासरस्वती धीरमानसानन्ददाभवत्तद्विभाजकंनामचक्ष्महे ३ मेदिनीविद्दानन्ददायिनीतदनंतरम्एकाक्षरीद्वौद्विरूपौसंवाक्षेनविभूषितौ ४ त्रिकांडशेषस्तत्पश्चात्पदवृन्दविभूषितः नानार्थकोशो नानार्थःसनाथःप्रार्थितस्ततः५ लघ्ववर्णैर्विरचितानेकार्थध्वनिमंजरी ततोहारावलीदिव्याशरीरपरिभूषिता ६ धनंजयोवररुचिर्नाममालातथैवच विपुलोमातृकाकोषः पंडितेनसुबुद्धिनामुद्रिताः प्रस्तरेसर्वेश्रीमन्नालालशर्मणा